# सदाचारानुसन्धानम्

॥ श्रीः ॥

सच्चिदानन्दकन्दाय जगदङ्कुरहेतवे ।
सदोदिताय पूर्णाय नमोऽनन्ताय विष्णवे ॥ १॥

सर्ववेदान्तसिद्धान्तैर्ग्रथितं निर्मलं शिवम् ।
सदाचारं प्रवक्ष्यामि योगिनां ज्ञानसिद्धये ॥ २॥

प्रातःस्मरामि देवस्य सवितुर्भर्ग आत्मनः ।
वरेण्यं तद्धियो यो नश्चिदानन्दे प्रचोदयात् ॥ ३॥

अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ।
यदेकं केवलं ज्ञानं तदेवास्मि परं बृहत् ॥ ४॥

ज्ञानाज्ञानविलासोऽयं ज्ञानाज्ज्ञाने च शाम्यति ।
ज्ञानाज्ञाने परित्यज्य ज्ञानमेवावशिष्यते ॥ ५॥

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
असङ्गोऽहमिति ज्ञात्वा शौचमेतत्प्रचक्षते ॥ ६॥

मन्मनो मीनवन्नित्यं क्रीडत्यानन्दवारिधौ ।
सुस्नातस्तेन पूतात्मा सम्यग्विज्ञानवारिणा ॥ ७॥

अथाघमर्षणं कुर्यात्प्राणापाननिरोधतः ।
मनः पूर्णे समाधाय मग्नकुम्भो यथार्णवे ॥ ८॥

लयविक्षेपयोः सन्धौ मनस्तत्र निरामिषम् ।
स सन्धिः साधितो येन स मुक्तो नात्र संशयः ॥ ९॥

सर्वत्र प्राणिनां देहे जपो भवति सर्वदा ।
हंसः सोऽहमिति ज्ञात्वा सर्वबन्धैर्विमुच्यते ॥ १०॥

तर्पणं स्वसुखेनैव स्वेन्द्रियाणां प्रतर्पणम् ।
मनसा मन आलोक्य स्वयमात्मा प्रकाशते ॥ ११॥

आत्मनि स्वप्रकाशाग्नौ चित्तमेकाहुतिं क्षिपेत् ।
अग्निहोत्री स विज्ञेयश्चेतरा नामधारकाः ॥ १२॥

देहो देवालयः प्रोक्तो देही देवो निरञ्जनः ।
अर्चितः सर्वभावेन स्वानुभूत्या विराजते ॥ १३॥

मौनं स्वाध्ययनं ध्यानं ध्येयं ब्रह्मानुचिन्तनम् ।
ज्ञानेनेति तयोः सम्यङ्निषेधात्तत्त्वदर्शनम् ॥ १४॥

अतीतानागतं किञ्चिन्न स्मरामि न चिन्तये ।
रागद्वेषं विना प्राप्तं भुञ्जाम्यत्र शुभाशुभम् ॥ १५॥

देहाभ्यासो हि संन्यासो नैव काषायवाससा ।
नाहं देहोऽहमात्मेति निश्चयो न्यासलक्षणम् ॥ १६॥

अभयं सर्वभूतानां दानमाहुर्मनीषिणः ।
निजानन्दे स्पृहा नान्ये वैराग्यस्यावधिर्मता ॥ १७॥

वेदान्तश्रवणं कुर्यान्मननं चोपपत्तिभिः ।
योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ १८॥

शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः ।
प्रसुप्तः पुरुषो यद्वच्छब्देनैवावबुद्ध्यते ॥ १९॥

आत्मानात्मविवेकेन ज्ञानं भवति निश्चलम् ।
गुरुणा बोधितः शिष्यः शब्दब्रह्मातिवर्तते ॥ २०॥

न त्वं देहो नेन्द्रियाणि न प्राणो न मनो न धीः ।
विकारित्वाद्विनाशित्वाद्दृश्यत्वाच्च घटो यथा ॥ २१॥

विशुद्धं केवलं ज्ञानं निर्विशेषं निरञ्जनम् ।
यदेकं परमानन्दं तत्त्वमस्यद्वयं परम् ॥ २२॥

शब्दस्याद्यन्तयोः सिद्धं मनसोऽपि तथैव च ।
मध्ये साक्षितया नित्यं तदेव त्वं भ्रमं जहि ॥ २३॥

स्थूलवैराजयोरैक्यं सूक्ष्महैरण्यगर्भयोः ।
अज्ञानमाययोरैक्यं प्रत्यग्विज्ञानपूर्णयोः ॥ २४॥

चिन्मात्रैकरसे विष्णौ ब्रह्मात्मैक्यस्वरूपके ।

भ्रमेणैव जगज्जातं रज्ज्वां सर्पभ्रमो यथा ॥ २५॥

तार्किकाणां तु जीवेशौ वाच्यावेतौ विदुर्बुधाः ।
लक्ष्यौ च साङ्ख्ययोगाभ्यां वेदान्तैरैक्यता तयोः ॥ २६॥

कार्यकारणवाच्यांशौ जीवेशौ यौ जहच्च तौ ।
अजहच्च तयोर्लक्ष्यौ चिदंशावेकरूपिणौ ॥ २७॥

कर्मशास्त्रे कुतो ज्ञानं तर्के नैवास्ति निश्चयः ।
साङ्ख्ययोगौ भिदापन्नौ शाब्दिकाः शब्दतत्पराः ॥ २८॥

अन्ये पाषण्डिनः सर्वे ज्ञानवार्तासुदुर्लभाः ।
एकं वेदान्तविज्ञानं स्वानुभूत्या विराजते ॥ २९॥

अहं ममेत्ययं बन्धो ममाहं नेति मुक्तता ।
बन्धमोक्षौ गुणैर्भाति गुणाः प्रकृतिसम्भवाः ॥ ३०॥

ज्ञानमेकं सदा भाति सर्वावस्थासु निर्मलम् ।
मन्दभाग्या न जानन्ति स्वरूपं केवलं बृहत् ॥ ३१॥

सङ्कल्पसाक्षि यज्ज्ञानं सर्वलोकैकजीवनम् ।
तदेवास्मीति यो वेद स मुक्तो नात्र संशयः ॥ ३२॥

प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा ।
यस्य भासावभासन्ते मानं ज्ञानाय तस्य किम् ॥ ३३॥

अर्थाकारा भवेद्वृत्तिः फलेनार्थः प्रकाशते ।
अर्थज्ञानं विजानाति स एवार्थः प्रकाशते ॥ ३४॥

वृत्तिव्याप्यत्वमेवास्तु फलव्याप्तिः कथं भवेत् ।
स्वप्रकाशस्वरूपत्वात्सिद्धत्वाच्च चिदात्मनः ॥ ३५॥

चित्तं चैतन्यमात्रेण संयोगाच्चेतना भवेत् ।
अर्थादर्थान्तरे वृत्तिर्गन्तुं चलति चान्तरे ॥ ३६॥

निराधारा निर्विकारा या दशा सोन्मनी स्मृता ।
चित्तं चिदिति जानीयात्तकाररहितं यदा ॥ ३७॥

तकारो विषयाध्यासो जपारागो यथा मणौ ।
ज्ञेयवस्तु परित्यागाज्ज्ञानं तिष्ठति केवलम् ॥ ३८॥

त्रिपुटी क्षीणतामेति ब्रह्मनिर्वाणमृच्छति ।
मनोमात्रमिदं सर्वं तन्मनो ज्ञानमात्रकम् ॥ ३९॥

अज्ञानं भ्रम इत्याहुर्विज्ञानं परमं पदम् ।
अज्ञानं चान्यथाज्ञानं मायामेतां वदन्ति ते ॥ ४०॥

ईश्वरं मायिनं विद्यान्मायातीतं निरञ्जनम् ।
सदानन्दे चिदाकाशे मायामेघस्तटिन्मनः ॥ ४१॥

अहन्ता गर्जनं तत्र धारासारा हि वृत्तयः ।
महामोहान्धकारेऽस्मिन्देवो वर्षति लीलया ॥ ४२॥

तस्या वृष्टेर्विरामाय प्रबोधैकसमीरणः ।
ज्ञानं दृग्दृश्ययोर्भावं विज्ञानं दृश्यशून्यता ॥ ४३॥

एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तज्ज्ञानं ज्ञानमुच्यते ॥ ४४॥

विज्ञानं चोभयोरैक्यं क्षेत्रज्ञपरमात्मनोः ।
परोक्षं शास्त्रजं ज्ञानं विज्ञानं चात्मदर्शनम् ॥ ४५॥

आत्मनो ब्रह्मणः सम्यगुपाधिद्वयवर्जितम् ।
त्वमर्थविषयं ज्ञानं विज्ञानं तत्पदाश्रयम् ॥ ४६॥

पदयोरैक्यबोधस्तु ज्ञानविज्ञानसंज्ञितम् ।
आत्मानात्मविवेकस्य ज्ञानमाहुर्मनीषिणः ॥ ४७॥

अज्ञानं चान्यता लोके विज्ञानं तन्मयं जगत् ।
अन्वयव्यतिरेकाभ्यां सर्वत्रैकं प्रपश्यति ॥ ४८॥

यत्तत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकम् ।
अज्ञानध्वंसकं ज्ञानं विज्ञानं चोभयात्मकम् ॥ ४९॥

ज्ञानविज्ञाननिष्ठोऽयं तत्सद्ब्रह्मणि चार्पणम् ।
भोक्ता सत्त्वगुणः शुद्धो भोगानां साधनं रजः ॥ ५०॥

भोग्यं तमोगुणः प्राहुरात्मा चैषां प्रकाशकः ।
ब्रह्माध्ययनसंयुक्तो ब्रह्मचर्यारतः सदा ॥ ५१॥

सर्वं ब्रह्मेति यो वेद ब्रह्मचारी स उच्यते ।
गृहस्थो गुणमध्यस्थः शरीरं गृहमुच्यते ॥ ५२॥

गुणाः कुर्वन्ति कर्माणि नाहं कर्तेति बुद्धिमान् ।
किमुग्रैश्च तपोभिश्च यस्य ज्ञानमयं तपः ॥ ५३॥

हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते ।
स गृही यो गृहातीतः शरीरं गृहमुच्यते ॥ ५४॥

सदाचारमिमं नित्यं योऽनुसंदधते बुधः ।
संसारसागराच्छीघ्रं स मुक्तो नात्र संशयः ॥ ५५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
सदाचारानुसन्धानं सम्पूर्णम् ॥